॥ महालक्ष्मीस्तुतिः ॥

आदिलक्ष्मि नमस्तेऽस्तु परब्रह्मस्वरूपिणि ।
यशो देहि धनं देहि सर्वकामांश्च देहि मे ॥ १॥

सन्तानलक्ष्मि नमस्तेऽस्तु पुत्रपौत्रप्रदायिनि । सन्तानलक्ष्मि वन्देऽहं
पुत्रान् देहि धनं देहि सर्वकामांश्च देहि मे ॥ २॥

विद्यालक्ष्मि नमस्तेऽस्तु ब्रह्मविद्यास्वरूपिणि ।
विद्यां देहि कलां देहि सर्वकामांश्च देहि मे ॥ ३॥

धनलक्ष्मि नमस्तेऽस्तु सर्वदारिद्र्यनाशिनि ।
धनं देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ ४॥

धान्यलक्ष्मि नमस्तेऽस्तु सर्वाभरणभूषिते ।
धान्यं देहि धनं देहि सर्वकामांश्च देहि मे ॥ ५॥

मेधालक्ष्मि नमस्तेऽस्तु कलिकल्मषनाशिनि ।
प्रज्ञां देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ ६॥

गजलक्ष्मि नमस्तेऽस्तु सर्वदेवस्वरूपिणि ।
अश्वांश्च गोकुलं देहि सर्वकामांश्च देहि मे ॥ ७॥

धीरलक्ष्मि नमस्तेऽस्तु पराशक्तिस्वरूपिणि ।
वीर्यं देहि बलं देहि सर्वकामांश्च देहि मे ॥ ८॥

जयलक्ष्मि नमस्तेऽस्तु सर्वकार्यजयप्रदे ।
जयं देहि शुभं देहि सर्वकामांश्च देहि मे ॥ ९॥

भाग्यलक्ष्मि नमस्तेऽस्तु सौमंगल्यविवर्धिनि ।
भाग्यं देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ १०॥

कीर्तिलक्ष्मि नमस्तेऽस्तु विष्णुवक्षस्थलस्थिते ।
कीर्तिं देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ ११॥

आरोग्यलक्ष्मि नमस्तेऽस्तु सर्वरोगनिवारणि । आरोग्यलक्ष्मि वन्देऽहं
आयुर्देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ १२॥

सिद्धलक्ष्मि नमस्तेऽस्तु सर्वसिद्धिप्रदायिनि ।
सिद्धिं देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ १३॥

सौन्दर्यलक्ष्मि नमस्तेऽस्तु सर्वालंकारशोभिते । सौन्दर्यलक्ष्मि वन्देऽहं
रूपं देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ १४॥

साम्राज्यलक्ष्मि नमस्तेऽस्तु भुक्तिमुक्तिप्रदायिनि । साम्राज्यलक्ष्मि वन्देऽहं
मोक्षं देहि श्रियं देहि सर्वकामांश्च देहि मे ॥ १५॥

मंगले मंगलाधारे मांगल्ये मंगलप्रदे ।
मंगलार्थं मंगलेशि मांगल्यं देहि मे सदा ॥ १६॥

सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्रयम्बके देवि नारायणि नमोऽस्तु ते ॥ १७॥

शुभं भवतु कल्याणी आयुरारोग्यसम्पदाम् ।
मम शत्रुविनाशाय दीपज्योति नमोऽस्तु ते ॥ १८॥

दीपज्योति नमस्तेऽस्तु दीपज्योति नमोऽस्तु ते ।